# संस्कृत-वाङ्मय का बृहद् इतिहास

## नवम-खण्ड
## न्याय

प्रधान सम्पादक
पद्मभूषण आचार्य श्री बलदेव उपाध्याय

सम्पादक
पं. गजानन शास्त्री मुसलगाँवकर

उत्तर प्रदेश संस्कृत संस्थान
लखनऊ

# संस्कृत-वाङ्मय का बृहद् इतिहास

नवम-खण्ड

## न्याय

(न्याय, वैशेषिक, सांख्य, योग, मीमांसा)


प्रधान सम्पादक

**पद्मभूषण आचार्य बलदेव उपाध्याय**

सम्पादक

**पं. गजानन शास्त्री मुसलगाँवकर**


**उत्तर प्रदेश संस्कृत संस्थान**

**लखनऊ**

प्रकाशक :
(श्रीमती) डॉ. अलका श्रीवास्तवा
निदेशक :
उत्तर प्रदेश संस्कृत संस्थान, लखनऊ

प्राप्ति स्थान :
विक्रय विभाग :
उत्तर प्रदेश संस्कृत संस्थान, नया हैदराबाद,
लखनऊ-२२६ ००७

प्रथम संस्करण :
वि.सं. २०५६ (१९९९ ई.)
प्रतियाँ : ११००
मूल्य : रु. २८०/- (दो सौ अस्सी रूपये)
उत्तर प्रदेश संस्कृत संस्थान, लखनऊ

मुद्रक : शिवम् आर्ट्स, निशातगंज, लखनऊ । दूरभाष : ३८६३८९

# पुरोवाक्

अस्ति जगदिदमगम्यैका प्रहेलिका। अस्य प्रहेलिकाभूतस्य जगतः स्वरूपज्ञानाय अनेकेषां सभ्य-शिक्षितदेशानां चिन्तनशीला मनीषिणः प्रयतमानाः सन्ति। भारतवर्षस्य तत्त्वदर्शिनो विद्वांसः स्वप्रातिभनेत्रैर्यानि सूक्ष्मतत्त्वानि दृष्टवन्तः, स्वीयया तीक्ष्णबुद्ध्या च यानि तत्त्वानि विश्लेषणपथमानीतवन्तस्तानि दर्शनशास्त्रस्येतिहासे नितान्तं महनीयानि सन्ति। तत्त्वज्ञानं हि विद्यते भारतीयसंस्कृतिधर्मयोर्मूलम्। तत्त्वज्ञानस्य गभीरमध्ययनमस्ति दर्शनशास्त्रस्य मूलमुद्देश्यम्।

'दृश्यते तत्त्वं येन' इति व्युत्पत्त्या येन वस्तुनः सत्यभूतं तात्त्विकं स्वरूपं दृश्यते तद् दर्शनमुच्यते। कोऽहम्, कुत आगच्छम्, अस्य परिदृश्यमानस्य विश्वस्य किमस्ति सत्यस्वरूपम्, कस्मादिदं जगदुत्पन्नम्, अस्याः सृष्टेः कारणं किम्, सृष्टिरियमचेतना चेतना वा, विश्वेऽस्मिन् किमस्ति मम कर्तव्यम्, सम्यग्जीवनस्य कः शोभनसाधनमार्गः, किमस्ति मानवजीवनस्य परमं प्रयोजनम्? इत्यादीनां प्रश्नानां समुचितमुत्तरदानमेव विद्यते दर्शनस्य प्रमुखं लक्ष्यम्।

दर्शनम् 'शास्त्र' शब्देनाभिधीयते। शास्त्रशब्दः शास्-शंस्- धातुभ्यां निष्पद्यते, यस्य क्रमशः शासनं शंसनं चेत्यर्थद्वयं भवति। शासने शास्त्रस्य धर्मशास्त्रमित्यर्थो भवति। शंसने च शास्त्रस्यार्थो वस्तुनः सत्यस्वरूपवर्णनं वर्तते। शासनशास्त्रं क्रियापरं शंसनशास्त्रं च ज्ञानपरं भवतः। भवति शंसनार्थे शास्त्रशब्दप्रयोगः दर्शनशब्देन साकम्। वर्तते धर्मशास्त्रं प्रधानतया विधिनिषेधयोर्विधानेन पुरुषतन्त्रं, किन्तु दर्शनशास्त्रं वस्तुस्वरूपप्रतिपादकत्वेन वस्तुतन्त्रं विद्यते। पाश्चात्यविचारशास्त्रस्य सामान्यं नाम वर्तते 'फिलासफी'। शब्दोऽयं 'फिलास' 'सोफिया' इति द्वयोः ग्रीकशब्दयोः मिश्रणेन निष्पद्यते। शब्द-द्वयेन निष्पन्नस्य 'फिलासफी' शब्दस्यार्थो भवति विद्यानुरागः। जीव-जगदीश्वरतत्त्वान्वेषणपरायणो विद्वानेव 'फिलासफर' (विद्यानुरागी) उच्यते। विविधविज्ञानैरुद्भावितसत्यानामेकीकरणमेवास्ति 'फिलासफी' इत्यस्य प्रतिपाद्यो विषयः। अतः सामान्यरूपेण दर्शनस्य कृते 'फिलासफी' शब्दः प्रयुज्यते। परन्तु 'फिलासफी' दर्शनशब्दयोः प्रयोजनेऽस्ति पार्थक्यम्। 'फिलासफी' कल्पनाकुशलकोविदान्नां मनोविनोदस्य साधनं विद्यते, किन्तु भारतीयदर्शनं दुःखमयसंतप्तजीवस्य मोक्षाय प्रशस्तपथं निर्दिशति। अतो भारतीयदर्शनस्य दृष्टिः पाश्चात्य 'फिलासफी' इत्यपेक्षया उदात्ता, व्यावहारिकी, लोकोपकारिका, सुव्यवस्थिता च विद्यते।

संस्कृतवाङ्मयस्य बृहदितिहासस्यास्मिन् नवमे खण्डे न्याय-वैशेषिक-सांख्य-योग-मीमांसानां पञ्चास्तिकदर्शनानां विस्तृतं विवेचनं विद्यते।

वैशेषिकदर्शनम्-विद्वन्मण्डले 'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्' इत्यस्त्येका भणितिः प्रथिता। शब्दार्थनिर्णये व्याकरणमिव पदार्थस्वरूपनिर्णये काणाददर्शनमत्यन्तमुपादेयं विद्यते। सन्त्यस्य दर्शनस्य काणादौलूक्यवैशेषिकानि त्रीणि नामानि। काणादम्, औलूक्यं चेति नामद्वयं दर्शनस्यास्याद्यप्रवर्तकं कणादम् उलूकं चाधृत्य वर्तते। अस्य वैशेषिकाभिधानन्तु

'विशेष' पदार्थस्वीकारेण प्रसिद्धिं गतम्। वैशेषिकदर्शनस्य प्रथमाचार्यः कणादो, येन वैशेषिक-सूत्राणि विरचितानि। वैशेषिकसूत्राणां भाष्येषु प्रशस्तपादस्य 'पदार्थधर्मसंग्रह' संज्ञकं भाष्यं वैशेषिकतत्त्वं निर्णेतुं नितान्तं मौलिकं ग्रन्थरत्नं मन्यते। प्रशस्तपादभाष्योपरि उदयनाद्याचार्याणां समुपलभ्यन्ते टीकासम्पत्तयः।

वैशेषिकदर्शनेऽभिधेयं वस्तु 'पदार्थ' इत्युच्यते। प्रमितिविषयत्वमपि पदार्थलक्षणमतोऽभिधेयत्वं ज्ञेयत्वञ्च पदार्थस्य भवति सामान्यलक्षणम्। वैशेषिकसूत्रेषु षट् पदार्था एवोपलभ्यन्ते। भावात्मकपदार्थानामेव वर्गीकरणमभीष्टं मत्वा कणादेन अभावपदार्थोऽस्वीकृतः। पदार्थेषु अभावस्य समावेशः पश्चाद्वर्तिना 'चन्द्र' नाम्नाऽऽचार्येण कृतः। 'विशेष' पदार्थस्य स्वीकृतिरेवास्य दर्शनस्य नैजं वैशिष्ट्यम्। एकस्याः श्रेण्याः समानगुणवतां वस्तूनामन्योन्यभेद-साधकः पदार्थ एव 'विशेष' उच्यते।

पदार्थविश्लेषणेन सहैव वैशेषिकदर्शनं मोक्षमपि निरूपयति। यदा अदृष्टस्याभावे सति कर्मचक्रगतिरवरुध्यते तदा आत्मा शरीरसंसर्गाद् विच्छिद्यते। जन्ममरणपरम्पराऽपि अस्तं गच्छति सर्वाणि दुःखानि विनश्यन्ति। अयमेव 'मोक्ष' उच्यते। (द्रष्टव्यम्-वैशेषिकसूत्रम् ५।२।१८) मोक्षोऽयं तत्त्वज्ञानादेव प्राप्यते। निवृत्तिधर्मप्रसूतं, द्रव्यादिषट्पदार्थानां साधर्म्य-वैधर्म्याभ्यां समुत्पन्नं तत्त्वज्ञानमेव अस्ति मोक्षस्य साधनम्। यद्यपि वैशेषिकदर्शनस्य सिद्धान्तस्तार्किक-दृष्ट्या नास्ति सर्वमान्यस्तथापि आधुनिकभौतिकविज्ञानमिव वैशेषिकस्य भौतिकजगत्समीक्षणं लौकिकदृष्ट्या नितान्तमुपादेयं विद्यते। तत्त्वप्रासादस्य एभिरेव सोपानैरद्वैततत्त्वशिखरोपलब्धिः संभवति।

## न्यायदर्शनम्

आस्तिकदर्शनेषु न्यायदर्शनं प्रामुख्यं भजति। वैदिकधर्मस्य स्वरूपबोधाय न्यायसिद्धान्तोऽस्ति परमोपयोगी। अत एव मनुस्मृतौ श्रुत्यनुगामिनस्तर्कस्य साहाय्येनैव धर्मरहस्यं ज्ञेयमित्युक्तम्। वात्स्यायनेन न्यायः सर्वासां विद्यानां प्रदीप उक्तः। अस्ति न्यायस्य व्यापकोऽर्थः-विभिन्नप्रमाणैर्वस्तुतत्त्वपरीक्षा। प्रमाणैरर्थपरीक्षणं न्यायः (वा. न्या. भाष्यम् १।१।१) अस्ति न्यायस्य अपरं नाम आन्वीक्षिकी। अन्वीक्षया-अनुमित्या प्रवृत्ता न्यायविद्या एव आन्वीक्षिकी कथ्यते।

भारतीयदर्शने ग्रन्थसम्पत्तिदृष्ट्या वेदान्तं विहाय न्यायस्य श्रेष्ठं स्थानं वर्तते। विक्रमपूर्वपञ्चमशतकादारभ्य अद्यावधि न्यायदर्शनस्य विमला धारा अबाधरूपेण प्रवहति। न्यायदर्शनविकासस्य द्वे धारे दृष्टिपथमायातः। प्रथमा सूत्रकाराद् गौतमादारभ्यते द्वितीया च गंगेशोपाध्यायात्। प्रथमायां प्राचीनन्यायधारायां पदार्थमीमांसाया द्वितीयायां नव्यन्यायधारायां प्रमाणमीमांसायाः प्राधान्यं दृश्यते।

गौतमर्षिविरचितानि न्यायसूत्राणि सन्ति पञ्चसु अध्यायेषु विभक्तानि, येषु प्रमाणादि षोडशपदार्था उद्देश-लक्षण-परीक्षणैः सम्यग् विवेचिता वर्तन्ते। वात्स्यायनो न्यायसूत्राणां विशदं

भाष्यं रचयामास। न्यायदर्शनविषयकानि-उद्योतकरस्य 'न्यायवार्तिकम्', वाचस्पतिमिश्रस्य 'तात्पर्यटीका', जयन्तभट्टस्य 'न्यायमञ्जरी', उदयनाचार्यस्य 'न्यायकुसुमाञ्जलिः', गंगेशोपाध्यायस्य 'तत्त्वचिन्तामणिः' इत्यादीनि ग्रन्थरत्नानि प्रशस्तानि लोकप्रियाणि च विद्यन्ते।

पदार्थनिरूपणेन साकं न्यायदर्शनमीश्वरमपि विवेचयति। ईश्वरानुग्रहेण विना प्रमेयज्ञानं मोक्षं च प्राप्तुं जीवो न पारयति। ईश्वरोऽस्य जगतः स्रष्टा, पालको नाशकश्च वर्तते। न्यायमते ईश्वरो विद्यतेऽस्य विश्वस्य निमित्तकारणं न तूपादनकारणम्। ईश्वर एव जीवमात्रस्य नियन्ता, कर्मफलस्य दाता, सुख-दुःखयोर्व्यवस्थापकश्च वर्तते। ईश्वरस्याधिपत्य एव जीवः स्वकर्मसम्पादनं विधाय परमं लक्ष्यं प्राप्तुं शक्नोति।

न्यायसूत्रानुसारेण दुःखादत्यन्तविमोक्षोऽपवर्ग उच्यते-'तदत्यन्तविमोक्षोऽपवर्गः' (न्यायसूत्रम् १।१।२२)। मुक्तावस्थायामात्मा विशुद्धो निर्गुणश्च तिष्ठति। मुक्तात्मनि सुखस्याभावोऽतस्तत्र न भवत्यानन्दानुभवः।

अस्ति शास्त्रीयविवेचनपद्धतिर्न्यायदर्शनस्यामूल्यो निधिः। प्रमाणस्य विशदां व्याख्यां विधाय न्यायेन यानि तत्त्वानि प्राकाश्यमानीतानि, तेषामन्यदर्शनैरपि कतिपयपरिवर्तनैः सह उपयोगः कृतः। हेत्वाभासानां सूक्ष्मं विवरणं प्रदाय न्यायदर्शनेन अनुमानस्य निर्दुष्टो मार्गो निर्दिष्टः। विद्यते न्यायदर्शनस्य विलक्षणा तर्कसरणिः सर्वथा श्लाघनीया।

## सांख्यदर्शनम्

भारतीयदर्शनेषु 'सांख्यं' स्वीक्रियते प्राचीनं महत्त्वपूर्णञ्च। सांख्यदर्शनस्य प्रवर्तको वर्तते महर्षिकपिलः। 'संख्यायन्ते-गण्यन्ते पदार्था अस्मिन्निति सांख्यम्' इति व्युत्पत्या प्रथमतः पदार्थानां गणना अस्मिन्नेव दर्शनेऽभूदतः संख्यायाः प्राधान्येन अस्य दर्शनस्य 'सांख्यं' नाम सर्वथा सार्थकं विद्यते। अस्ति सांख्यस्य अपरोऽर्थः 'विवेकज्ञानम्'। प्रकृतिपुरुषयोरज्ञाने संसारभावः ज्ञाने च मोक्ष इति प्रकृतिपुरुषयोर्विवेकज्ञानस्य प्रामुख्येन दर्शनमिदं सांख्यं निगद्यते।

उपनिषत्सु निर्दिष्टसिद्धान्तानां शास्त्रदृष्ट्या विवेचनं सर्वप्रथमं कपिलमुनिना कृतम्। उपनिषत्कालिकं सांख्यं वेदान्तमिश्रितमासीत्। तद् विभज्य सांख्यं स्वतन्त्रदर्शनपदे कपिलेन प्रतिष्ठापितम्, अतएव कपिलः 'आदि विद्वान्' इति महनीयेन उपाधिना विभूषितो जातः। कपिलमुनेर्द्वे कृती समुपलभ्येते-तत्त्वसमासः, सांख्यसूत्रम्। 'तत्त्वसमासः' द्वाविंशति-लघुसूत्राणां समुच्चयोऽस्ति। सांख्यसूत्रे षडध्यायाः, तेषु च ५३७ संख्याकानि सूत्राणि विद्यन्ते। 'तत्त्वसमासः' सांख्यदर्शनस्य प्राचीनतमो ग्रन्थ इत्यनेके मनीषिणः स्वीकुर्वन्ति। कपिलमुनेः पश्चात् सांख्यमतप्रवर्तकेषु आसुरिपञ्चशिखेश्वरकृष्णाः प्रमुखा आचार्याः सन्ति। एषु ईश्वरकृष्णस्य 'सांख्यकारिका' सांख्यदर्शनस्य प्रामाणिकी लोकप्रिया च रचना विद्यते।

सांख्यदर्शने पञ्चविंशति तत्त्वानि परिगणितानि तेषु चतुर्विंशति तत्त्वानि सन्ति प्राकृतानि। एकञ्च पुरुषतत्त्वं वर्तते। एषामेव पञ्चविंशतितत्त्वानां गणनाऽभूत्सांख्यदर्शने।

कार्यकारणविषयेऽस्ति सांख्यस्यैकं विशिष्टं मतं यत् 'सत्कार्यवाद' शब्देन प्रसिद्धम्। सांख्यदर्शनं कारणव्यापारात् प्रागपि कार्यं सदिति स्वीकरोति। न्यायवैशेषिकमतं कारणव्यापारात् पूर्वं कार्यमसदिति मनुते। सांख्यस्याभिमतः परिणामवादो न तु विवर्तवादः।

सांख्यदर्शनस्य पञ्चविंशतितमं तत्त्वं पुरुषः। स हि पुरुषः स्वयंसिद्धोऽनेकश्च। सांख्यं युक्त्या पुरुषबहुत्वं प्रतिपादयति। प्रकृतिपुरुषयोः संयोगेन भवति विश्वस्य सृष्टिः। प्रलयकाले त्रिगुणात्मिका प्रकृतिस्तिष्ठति साम्यावस्थायाम्। प्रकृत्या पुरुषस्य संयोगे जाते त्रिषु गुणेषु क्षोभ उत्पद्यते। त्रयोऽपि गुणास्तदा विषमा भवन्ति। प्रकृत्या अस्यामेव विषमावस्थायां सृष्टिकार्यमारभ्यते। सांख्याः प्रमेयं ज्ञातुं प्रत्यक्षम्, अनुमानम्, शब्द इति त्रीण्येव प्रमाणानि स्वीचक्रुः।

सांख्यदर्शने पुरुषः चेतनः निष्क्रियः द्रष्टा च वर्तते। प्रकृतिरचेतना सक्रिया त्रिगुणात्मिका च विद्यते। पुरुषोऽस्ति स्वभावतोऽसंगो मुक्तश्च, किन्तु अविवेकवशात् प्रकृत्या संयुज्यते। अनेनैव संयोगेन प्रकृतिजन्यैः दुःखैः पुरुषः प्रतिबिम्बितो भवति। अयमेव पुरुषस्य संसारभावः कथ्यते। संसारभावस्य मूलमविवेको निवृत्तिसाधनञ्च विवेको भवतः। सांख्यदर्शने प्रकृतिपुरुषयोर्भेदज्ञानं, पुरुषस्य प्रकृतेः पृथक् स्थितिर्वा अपवर्ग (मोक्षः) उच्यते। नष्टे शरीरे पुरुष ऐकान्तिकात्यन्तिकदुःखत्रयविनाशं प्राप्नोति। अस्या एवावस्थायाः शास्त्रीयाभिधा विद्यते विदेहमुक्तिः। सांख्यस्य तत्त्वमीमांसा वैशेषिकपदार्थमीमांसापेक्षया अधिका युक्तिसंगता वर्तते। विद्यते सांख्यस्य तत्त्वविश्लेषणं लोकदृष्ट्या व्यावहारिकं द्वैतमतसमर्थकञ्च।

## योगदर्शनम्

योगशास्त्रमार्यजातेरस्ति प्राचीनतमं ज्ञानम्, यस्मिन् न विद्यते कोऽपि विवादः। योग एवास्ति सर्वोत्तमो मोक्षोपायः संसारसागरनिमग्नस्य जीवस्येश्वरसंयोगे भक्तिज्ञानयोश्च प्रधानं साधनम्। यद्यपि समुपलब्धयोगसूत्राणां प्रणेता पतञ्जलिः, किन्तु तस्मादपि योगः प्राचीना अध्यात्मप्रक्रिया विद्यते। संहितासु, ब्राह्मणेषु, उपनिषत्सु चानेकत्र योगस्य सङ्केत उपलभ्यते। योगः सांख्याभिमतं सर्वं तत्त्वं स्वीकृत्य ईश्वरं तदतिरिक्तं षड्विंशतितमं तत्त्वं मनुते। अतएव योगः 'सेश्वरसांख्य' मप्युच्यते।

सन्ति योगदर्शने चत्वारः पादाः, येषु सूत्राणां संख्या १९५ वर्तते। प्रथमे समाधिपादे समाधेः रूपम्, भेदः, चित्तम्, तस्य वृत्तयश्च वर्णिताः सन्ति। द्वितीये साधनपादे क्रियायोगक्लेशाष्टाङ्गयोगानां वर्णनं विद्यते। तृतीये विभूतिपादे धारणाध्यानसमाध्यनन्तरं योगानुष्ठानादुत्पन्ना विभूतयो वर्णिताः सन्ति। चतुर्थे कैवल्यपादे समाधिसिद्धिः, विज्ञानवादनिरासः कैवल्यनिर्णयश्च प्रतिपादिताः सन्ति। पातञ्जलयोगसूत्रस्य 'व्यासभाष्य' मतीव प्रामाणिको ग्रन्थः। योगसूत्राणां गूढरहस्योद्घाटने भाष्यमिदं परमोपयोगि वर्तते। योगसूत्राणां विविधासु टीकासु भोजस्य 'राजमार्तण्ड': (भोजवृत्तिः), भावावेशस्य 'वृत्तिः', रामानन्दयतेः 'मणिप्रभा', अनन्तपण्डितस्य 'योगचन्द्रिका', सदाशिवेन्द्रस्य 'योगसुधारकः', नागोजिभट्टस्य 'लघ्वी' 'बृहती' वृत्तयः नितान्तं प्रथिताः सन्ति। वाचस्पतिमिश्रेण व्यासभाष्यस्य 'तत्त्ववैशारदी' व्याख्या

विलिख्य योगतत्त्वानि बोधगम्यानि कृतानि। व्याख्यायामस्यां योगसूत्रव्यासभाष्ययोः पारिभाषिकशब्दाः विस्तरेण परिष्कृताः सन्ति।

समाध्यर्थकस्य 'युज्' धातोर्निष्पन्नस्य 'योग' शब्दस्य 'समाधिः' इत्यर्थो भवति। अस्ति पतञ्जलेर्योगलक्षणम्-'योगश्चित्तवृत्तिनिरोधः'। मनोबुद्ध्यहङ्काररूपमन्तःकरणमेव चित्तम्। तस्य चित्तस्य नियमनमेव योगः। अन्तःकरणरूपस्य चित्तस्य सन्ति क्षिप्त-मूढ-विक्षिप्त-एकाग्रनिरुद्धाख्याः पञ्च भूमयः। चित्तवृत्तीनां च प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपाः भवन्ति पञ्च भेदाः। योगसिद्धौ चित्तवृत्तिभिः सह तासां संस्काराणामपि निरोध आवश्यकः। अत एव चित्तस्य स्थूलवृत्तीनां सूक्ष्मसंस्काराणाञ्च निरोधादेव योगः पूर्णतामाप्नोति।

योगदर्शने स्तः समाधेर्द्वौ भेदौ-सम्प्रज्ञातसमाधिः असम्प्रज्ञातसमाधिश्च। सम्प्रज्ञातसमाधौ ध्येये वस्तुनि चित्तं चिरकालं यावत् तिष्ठति। अस्यामवस्थायां किमप्यालम्बनं भवत्येव। असम्प्रज्ञातसमाधौ सर्वा अपि चित्तवृत्तयो निरुध्यन्ते। न तिष्ठति किमप्यालम्बनं तत्र। सम्प्रज्ञातसमाधौ ध्येयवस्तुनो ज्ञानं तिष्ठति, असम्प्रज्ञातसमाधौ ध्येय-ध्यानध्यातॄणामेकाकारता जायते। योगदर्शनस्य विद्यते परमोद्देश्यमात्मदर्शनम्।

योगदर्शने ईश्वरः पुरुषविशेषरूपेण स्वीकृतो विद्यते। 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर' इति योगस्य ईश्वरलक्षणम्। योगाचार्याः ईश्वरसिद्धौ शब्दप्रमाणं श्रेष्ठं मन्यन्ते। ईश्वरप्रणिधानेन समाधिसिद्धिः। ईश्वरो गुरूणामपि गुरुरतस्तारकज्ञानदः साक्षादीश्वर एव इति योगस्य सिद्धान्तः।

मानवजीवनस्याध्यात्मिकोत्कर्षेऽस्ति योगः परमोपयोगी। भारतीयैरस्य दर्शनस्यानुशीलनं विज्ञानमिव कृतम्। कायचित्तमलोन्मूलनद्वारा आध्यात्मिकसमुन्नतेः शिक्षां योगदर्शनादेव जीवो लभते। साम्प्रतं पाश्चात्यमनोवैज्ञानिकाः, चिकित्सकाः, तत्त्वान्वेषिणो मनीषिणश्च योगं प्रत्याकृष्टा इव लक्ष्यन्ते, येन योगस्य विपुलः प्रचारः पाश्चात्त्यदेशेष्वपि दरीदृश्यते।

## मीमांसादर्शनम्

कस्यापि वस्तुस्वरूपस्य यथार्थवर्णनं भवति मीमांसाशब्दार्थः। विद्यते वेदस्य मुख्यतो विभागद्वयम्-कर्मकाण्डम्, ज्ञानकाण्डम् इति। यज्ञादिविधिवर्णनं कर्मकाण्डस्य विषयः, जीवजगदीश्वररूपाणां तेषां च सम्बन्धनिरूपणं ज्ञानकाण्डस्य विषयः। मीमांसाऽपि द्विविधा कर्ममीमांसा, ज्ञानमीमांसा च। 'कर्ममीमांसा' इति नाम्नाभिहितं दर्शनमेव 'मीमांसा' उच्यते। ज्ञानमीमांसा नाम्ना प्रसिद्धं 'वेदान्त' इति कथ्यते। मीमांसादर्शनं पूर्णतया वैदिकं वर्तते। 'मीमांसते' इति क्रियापदस्य, 'मीमांसा' इति संज्ञापदस्य च प्रयोगो ब्राह्मणग्रन्थेषु उपनिषत्सु चोपलभ्यते। अतः मीमांसादर्शनमतिप्राचीनकालसम्बद्धमिति प्रतीयते।

धर्मस्वरूपविवेचनमेव मीमांसायाः प्रतिपाद्यो विषयः-'धर्माख्यं विषयं वस्तु मीमांसायाः प्रयोजनम्' (श्लो.वा. श्लो.१) वेदविहितमिष्टसाधनं धर्मः, वेदनिषिद्धानिष्टसाधनमधर्मः। अस्मिन् विश्वे कर्म एव सर्वोत्कृष्टं वस्तु। तस्मादेव कर्मणो निश्चयेन फलमुत्पद्यते। मीमांसा-दर्शनेऽस्ति

'अपूर्व' संज्ञकः कश्चित् सिद्धान्तः। कर्म अपूर्वमुत्पादयति, अपूर्वेण च फलमुत्पद्यते। इत्थं हि 'अपूर्व' एव कर्मफलयोर्बन्धनशृंखला प्रतीयते।

कर्मज्ञानयोर्विषयेऽस्ति मीमांसावेदान्तयोर्मतभिन्नता। वेदान्तानुसारेण कर्मत्यागानन्तरमेव आत्मज्ञानं संभवति। कर्म तु केवलं चित्तशुद्धिसाधनम्। मोक्षप्राप्तिस्तु ज्ञानेनैव भवितुमर्हति- 'ऋते ज्ञानान्न मुक्तिः'। मीमांसानुसारेण मोक्षार्थिभिरपि जनैः कर्म कर्तव्यम्। वेदविहित-कर्मानुष्ठानेन कर्मबन्धनं स्वत एव विनश्यति। अतः कर्मानुष्ठानमेवाभीष्टं न तु कर्मवर्जनम्। वैदिकदर्शनस्य प्राणतत्त्वं विद्यते मीमांसाशास्त्रम्। मीमांसाशास्त्रस्य सूत्रकारो जैमिनिः। मीमांसादर्शनस्य षोडशाध्यायेषु प्रथमे द्वादशाध्यायाः 'द्वादशलक्षणी' इति नाम्ना प्रथिताः, शेषाश्चत्वारोऽध्यायाः 'देवताकाण्डम्' इति संज्ञया प्रसिद्धाः सन्ति। अस्या एव द्वादशलक्षण्याः वृत्तिभाष्यवार्तिकरूपाः रचनाः कालान्तरेऽभूवन्। द्वादशलक्षण्याः प्राचीनतमो वृत्तिकार उपवर्ष आसीत्। शबरस्वामिना समेषां द्वादशाध्यायानां भाष्यं निर्माय मीमांसादर्शनस्य गभीरतत्त्वानि निपुणं विवेचितानि

मीमांसादर्शनस्येतिहासे कुमारिलभट्टो मौलिककल्पनया, विशदव्याख्यया, विलक्षणप्रतिभया च सदा स्मरणीयः समादरणीयश्च स्थास्यति। शाबरभाष्योपरि कारिकाबद्धं विपुलकायं 'श्लोकवार्तिकं' कुमारिलभट्टस्यैव महनीयं ग्रन्थरत्नं विद्यते। 'मीमांसा' वेदस्यापौरुषेयत्वमङ्गीकरोति। मीमांसायां वेदस्य नित्यत्वे शब्दनित्यत्वमेव सर्वोत्कृष्टं प्रमाणम्। वेदो हि नित्यशब्दराशितो नित्यः। अस्मिन्मते सत्यं स्वतःप्रकाश्यं वर्तते। सत्यसिद्धये नास्ति प्रमाणान्तरापेक्षा। तत्त्वज्ञानदृष्ट्या मीमांसा जगत्प्रपञ्चं नित्यं स्वीकुरुते। कार्यकारणसम्बन्धव्याख्यानेऽस्ति मीमांसाया नवीना दृष्टिः। तन्मते कार्योत्पत्तौ कारणेन सह शक्तिरपि स्वीकार्या, यतो हि शक्तिरपि विद्यते एको विशिष्टः पदार्थः।

वैदिककर्मणां फलमस्ति स्वर्गप्राप्तिः। निरतिशयस्य सुखस्य एव अपरं नाम स्वर्गः। 'स्वर्गकामो यजेत' इति वाक्यानुसारेण यज्ञसम्पादनस्य प्रयोजनं स्वर्गकामनैव। मन्यते कर्मकाण्डस्योपादेयत्वं मीमांसा, अत एव सा कर्म एव ईश्वरं स्वीकरोति। अस्मादेव कारणात् प्राचीनमीमांसा 'निरीश्वरा' इति प्रतीयते।

मीमांसादर्शने मोक्षस्यापि सूक्ष्मविवेचनं कृतमस्ति। 'प्रपञ्चसम्बन्धविलयो मोक्ष' इति मीमांसाभिमतं मोक्षलक्षणम्। अस्मात् जगत्प्रपञ्चात् आत्मनः सम्बन्धविच्छेद एव मोक्षः। वैदिकधर्मतत्त्वज्ञानाय मीमांसादर्शनस्य सम्यगनुशीलनं नितान्तमुपादेयमिति निष्कर्षः।

नवमखण्डस्यास्य सम्पादको **डॉ. गजानन शास्त्रि मुंसलगाँवकरमहोदयो**ऽस्ति दर्शनशास्त्रस्य विश्रुतो विद्वान्। अस्य महाभागस्य वैदुष्यपूर्णे सम्पादकत्वे ग्रन्थोऽयं शोभनतया प्राकाश्यं नीतोऽतो **डॉ. मुसलगाँवकर महोदयः** साधुवादैः संयोज्यते।

अस्य खण्डस्य दर्शनतत्त्वविदो लेखका अपि धन्यवादार्हा येषां लेखैर्ग्रन्थोऽयं गुरुतामुपैति।

येषाञ्च मनीषिणां साहित्यसम्पत्तिः साक्षात् परम्परया वा गन्थस्यास्य पूर्णतायामुपयोगिनी जाता, तान्प्रत्यपि स्वां कृतज्ञतां ज्ञापयन् परां मुदमनुभवामि।

अस्मिन् प्रसङ्गे उत्तर-प्रदेश-संस्कृत-संस्थानस्य निदेशकचरः **श्री मधुकर द्विवेदी,**

वर्तमाननिदेशिका **डॉ. (श्रीमती) अलका श्रीवास्तवा,** सहायकनिदेशको डा. **चन्द्रकान्त द्विवेदी** च साधुवादार्हाः, येषां प्रभूतं साहाय्यमस्य ग्रन्थस्य प्रकाशनेऽत्यन्तमुपयोगि वरीवर्ति।

प्रस्तुतनवमखण्डस्य समीचीनतया सम्पादने ममान्तेवासी **डॉ. रमाकान्त झा** उपयोगि साहाय्यमकार्षीदतस्तमपि स्वाशीर्वचनैः संयोजयामि।

अवसाने च **'शिवम् आर्ट'** इत्याख्यस्य मुद्रणालयस्य व्यवस्थापकेभ्यो **द्विवेदिमहोदयेभ्यः** शुभाशंसां वितरामि, येषां सक्रियसहयोगेन खण्डस्यास्य मुद्रणं निर्विघ्नं सम्पन्नमभूत्।

काशी **बलदेव उपाध्याय**

अक्षयतृतीया सं. २०५६ वि.

१८ अप्रैल, १९९९ ई.

# पुरोवाक्

संसार एक अबूझ पहेली है जिसे सुलझाने के लिए अनेक सभ्य और शिक्षित देशों के चिन्तनशील मनीषियों ने प्रशस्त प्रयास किया है। भारतवर्ष के तत्त्वदर्शी विद्वानों ने अपने प्रातिभ चक्षु से जिन सूक्ष्म तत्त्वों का साक्षात्कार किया है और अपनी पैनी बुद्धि के द्वारा जिन सिद्धान्तों का विश्लेषण किया है, वे दर्शन के इतिहास में नितान्त महनीय हैं। तत्त्वज्ञान तो भारतीय संस्कृति और धर्म की मूल प्रतिष्ठा है जिसके अभ्युदय से परिचित होना प्रत्येक सुशिक्षित भारतीय का पावन कर्तव्य है। भारतीय तत्त्वज्ञान का मार्मिक विश्लेषण और गम्भीर अध्ययन दर्शनशास्त्र का मूल उद्देश्य हैं।

'दर्शन' शब्द का व्युत्पत्तिलभ्य अर्थ है- 'दृश्यते तत्त्वम् अनेन इति दर्शनम्'- जिसके द्वारा वस्तु के सत्यभूत तात्त्विक स्वरूप को देखा जाय वह दर्शन है। हम कौन हैं ? कहाँ से आये हैं ? इस सर्वतो दृश्यमान जगत् का सत्य स्वरूप क्या है ? इसकी उत्पत्ति कहाँ से हुई ? इस सृष्टि का कौन कारण है ? यह चेतन है या अचेतन ? इस विषय में हमारा क्या कर्तव्य है ? जीवन को सुचारु रूप से जीने के लिए कौन सा उपयुक्त साधनमार्ग है, जीवन का चरम लक्ष्य क्या हैं ? आदि जिज्ञासाओं का समुचित समाधान देना 'दर्शन' का प्रमुख ध्येय हैं। दर्शन को 'शास्त्र' शब्द से अभिहित किया है। शास्त्र शब्द शास् और शंस् इन दो धातुओं से निष्पन्न होता है, जिसका क्रमशः शासन और शंसन अर्थ होता है। शासन अर्थ में शास्त्र का अर्थ धर्मशास्त्र है और शंसन अर्थ में शास्त्र का अर्थ वस्तु के सच्चे स्वरूप का वर्णन है। शासनशास्त्र क्रियापरक और शंसनशास्त्र ज्ञानपरक होता है। शंसनशास्त्र के अर्थ में ही 'शास्त्र' का प्रयोग दर्शन शब्द के साथ होता है। धर्मशास्त्र विधिनिषेध का प्रधानतया विधान करने में 'पुरुष परतंत्र है', किन्तु दर्शनशास्त्र वस्तुस्वरूप का प्रतिपादक होने से 'वस्तुतन्त्र' है।

पाश्चात्त्य विचारशास्त्र (दर्शन) का सामान्य नाम 'फिलासफी' है। यह शब्द दो ग्रीक शब्दों के मिश्रण से बना हुआ है-फिलास-प्रेम या अनुराग तथा 'सोफिया'-विद्या। अतः इस शब्द का अर्थ है विद्या का अनुराग। जो जिज्ञासु विद्वान् जीव, जगत्, ईश्वर, धार्मिक और सामाजिक तत्त्वों के अन्वेषण में प्रयत्नशील होते थे वे 'फिलासफर' (विद्यानुरागी) कहलाते थे। विभिन्न विज्ञानों के द्वारा उद्भावित सत्यों का एकीकरण फिलासफी का विषय है। अतः सामान्य रूप से दर्शन के लिए फिलासफी का प्रयोग किया जा सकता है, परन्तु दोनों के ध्येय में पार्थक्य है। दोनों शब्दों के शाब्दिक अर्थों से दोनों के उद्देश्य की भिन्नता की सूचना मिलती है। फिलासफी कल्पनाकुशल कोविदों के मनोविनोद का साधनमात्र है, किन्तु भारतीय दर्शन दुःखत्रय- आधिभौतिक, आधिदैविक, आध्यात्मिक दुःख के अहर्निशविघात से उद्विग्न

जीव को मोक्ष के निए साधन का मार्ग प्रशस्त करता है। अतः भारतीय दर्शन की दृष्टि पाश्चात्त्य फिलासफी की अपेक्षा कहीं अधिक व्यावहारिक, लोकोपकारक और सुव्यवस्थित है।

संस्कृत वाङमय के इतिहास के इस नवम खण्ड में न्याय, वैशेषिक, सांख्य, योग और मीमांसा इन पाँच आस्तिक दर्शनों का सांगोपांग विवेचन किया गया है।

**न्यायदर्शन**-आस्तिक दर्शनों में न्यायदर्शन का प्रमुख स्थान है। वैदिक धर्म के स्वरूप के अनुसन्धान के लिए न्याय की परम उपादेयता है। इसीलिए मनुस्मृति में श्रुत्यनुगामी तर्क की सहायता से ही धर्म के रहस्य को जानने की बात कही गई है। वात्स्यायन ने न्याय को समस्त विद्याओं का प्रदीप कहा है। 'न्याय' का व्यापक अर्थ है- विभिन्न प्रमाणों की सहायता से वस्तुतत्त्व की परीक्षा-प्रमाणैरर्थपरीक्षणं न्यायः। (वा.न्या.भा.१/१/१)। प्रमाणों के स्वरूपवर्णन तथा परीक्षणप्रणाली के व्यावहारिक रूप के प्रकटन के कारण यह न्याय दर्शन के नाम से अभिहित है। न्याय का दूसरा नाम है आन्वीक्षिकी। अर्थात् अन्वीक्षा के द्वारा प्रवर्तित होने वाली विद्या। अन्वीक्षा का अर्थ है-प्रत्यक्ष या आगम पर आश्रित अनुमान अथवा प्रत्यक्ष तथा शब्द प्रमाण की सहायता से अवगत विषय का अनु-पश्चात् ईक्षण-पर्यालोचन-ज्ञान अर्थात् अनुमिति। अन्वीक्षा के द्वारा प्रवृत्त होने से न्याय विद्या आन्वीक्षिकी है।

भारतीय दर्शन के इतिहास में ग्रन्थसम्पत्ति की दृष्टि से वेदान्त दर्शन को छोड़कर न्यायदर्शन का स्थान सर्वश्रेष्ठ है। विक्रमपूर्व पञ्चमशतक से लेकर आजतक न्यायदर्शन की विमल धारा अबाधगति से प्रवाहित है। न्यायदर्शन के विकास की दो धारायें दृष्टिगोचर होती हैं। प्रथम धारा सूत्रकार गौतम से आरम्भ होती है, जिसे षोडश पदार्थों के यथार्थ निरूपक होने से पदार्थमीमांसात्मक प्रणाली कहते हैं। दूसरी प्रणाली को प्रमाणमीमांसात्मक कहते हैं, जिसे गंगेशोपाध्याय ने 'तत्त्वचिन्तामणि' में प्रवर्तित किया। प्रथम धारा को 'प्राचीन न्याय' और द्वितीय धारा को 'नव्यन्याय' कहते हैं। प्राचीनन्याय में मुख्य विषय पदार्थमीमांसा और नव्यन्याय में प्रमाणमीमांसा है।

न्यायसूत्र के रचयिता का गोत्रनाम गौतम और व्यक्तिगत नाम अक्षपाद है। न्यायसूत्र पाँच अध्यायों में विभक्त है जिनमें प्रमाणादि षोडश पदार्थों के उद्देश्य, लक्षण तथा परीक्षण किये गये हैं। वात्स्यायन ने न्यायसूत्रों पर विस्तृत भाष्य लिखा है। इस भाष्य का रचनाकाल विक्रमपूर्व प्रथम शतक माना जाता है। न्यायदर्शन से सम्बद्ध उद्योतकर का न्यायवार्तिक, वाचस्पति मिश्र की तात्पर्यटीका, जयन्तभट्ट की न्यायमञ्जरी, उदयनाचार्य की न्याय-कुसुमाञ्जलि, गंगेश उपाध्याय की तत्त्वचिन्तामणि आदि ग्रन्थ अत्यन्त प्रशस्त एवं लोकप्रिय हैं। न्यायदर्शन षोडश पदार्थों के निरूपण के साथ ही 'ईश्वर' का भी विवेचन करता है। न्यायमत में ईश्वर के अनुग्रह के विना जीव न तो प्रमेय का यथार्थ ज्ञान पा सकता है और न इस जगत् के

दुःखों से ही छुटकारा पाकर मोक्ष पा सकता है। ईश्वर इस जगत् की सृष्टि, पालन तथा संहार करने वाला है। ईश्वर असत् पदार्थों से जगत् की रचना नहीं करता, प्रत्युत परमाणुओं से करता है जो सूक्ष्मतम रूप में सर्वदा विद्यमान रहते हैं। न्यायमत में ईश्वर जगत् का निमित्त कारण है, उपादान कारण नहीं। ईश्वर जीवमात्र का नियन्ता है, कर्मफल का दाता है तथा सुख-दुःखों का व्यवस्थापक है। उसके नियन्त्रण में रहकर ही जीव अपना कर्म सम्पादन कर जीवन का सर्वोच्च लक्ष्य प्राप्त करता है।

न्यायसूत्र के अनुसार दुःख से अत्यन्त विमोक्ष को 'अपवर्ग' कहा गया है-'तदत्यन्त-विमोक्षोऽपवर्गः (न्यायसूत्र १।१।२२)। मुक्तावस्था में आत्मा अपने विशुद्ध रूप में प्रतिष्ठित और अखिल गुणों से रहित होता है। मुक्तात्मा में सुख का भी अभाव रहता है अतः उस अवस्था में आनन्द की भी प्राप्ति नहीं होती। उद्योतकर के मत में निःश्रेयस के दो भेद हैं-अपर निःश्रेयस तथा परनिःश्रेयस। तत्त्वज्ञान ही इन दोनों का कारण है। जीवन्मुक्ति को अपरनिःश्रेयस और विदेहमुक्ति को परनिःश्रेयस कहते हैं।

भारतीय दर्शन-साहित्य को न्यायदर्शन की सबसे अमूल्य देन शास्त्रीय विवेचनात्मक पद्धति है। प्रमाण की विस्तृत व्याख्या तथा विवेचना कर न्याय ने जिन तत्त्वों को खोज निकाला है, उनका उपयोग अन्य दर्शन ने भी कुछ परिवर्तनों के साथ किया है। हेत्वाभासों का सूक्ष्म विवरण देकर न्याय दर्शन ने अनुमान को दोषमुक्त करने का मार्ग प्रशस्त किया है। न्यायदर्शन की तर्कपद्धति श्लाघनीय है।

**वैशेषिक दर्शन**-विद्वत्समाज में एक आभाणक प्रसिद्ध है-'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्'। अर्थात् कणाद दर्शन और पाणिनीय व्याकरण सब शास्त्रों में उपकारक होते हैं। शब्द के यथार्थ निर्णय में व्याकरण की भाँति ही पदार्थों के स्वरूप-निर्णय में कणाद (वैशेषिक) दर्शन अत्यन्त उपादेय है। इस दर्शन के नाम कणाद, औलूक्य तथा वैशेषिक हैं। कणाद और औलूक्य नाम इसके आद्यप्रवर्तक कणाद तथा उलूक के नाम पर हैं और वैशेषिक अभिधान 'विशेष' पदार्थ को स्वीकार करने के कारण है। वैशेषिक दर्शन के प्रथम आचार्य कणाद हैं जिन्होंने वैशेषिक सूत्र की रचना की। वैशेषिक सूत्र के भाष्यों में प्रशस्तपाद का 'पदार्थधर्मसंग्रह' नामक भाष्य वैशेषिक तत्त्वों के निरूपण के लिए नितान्त मौलिक ग्रन्थ है। प्रशस्तपादभाष्य पर उदयन आदि आचार्यों की टीकाएँ उपलब्ध हैं।

वैशेषिक दर्शन में जगत् की वस्तुओं के लिए पदार्थ शब्द का व्यवहार किया गया है। पदार्थ का अर्थ है अभिधेय वस्तु-नाम धारण करने वाली चीज। प्रमिति (ज्ञान) का विषय होना भी पदार्थ का लक्षण है अतः ज्ञेयता और अभिधेयता पदार्थ का सामान्य लक्षण है। वैशेषिक सूत्रों में छः पदार्थों के नाम ही उपलब्ध होते हैं। भावात्मक पदार्थों का वर्गीकरण अभीष्ट होने के कारण कणाद ने अभाव को पदार्थ नहीं माना है। इस दर्शन में पदार्थों की गणना में अभाव की मान्यता पश्चाद्वर्ती चन्द्र नामक आचार्य की देन है। इस दर्शन की

खास विशेषता 'विशेष' पदार्थ की स्वीकृति है। एक श्रेणी के समान गुणवाली वस्तुओं के पारस्परिक भेद को सिद्ध करने वाला पदार्थ ही विशेष है (द्रष्टव्य वै.सू.१/२/६; प्र.पा. भा.पृ.१६८-१००, न्या.क.पृ. ३२३-२४, मुक्ता.का.१०)। पदार्थ के विश्लेषण के साथ ही वैशेषिक दर्शन में मोक्ष का भी निरूपण किया गया है। जब अदृष्ट के अभाव होने पर कर्मचक्र की गति समाप्त हो जाती है, तब आत्मा का शरीर से सम्बन्ध टूट जाता है और जन्म-मरण की परम्परा भी उसी के साथ बन्द हो जाती है, साथ ही सब दुःखों का अन्त हो जाता है, यही मुक्ति है (द्रष्टव्य, वैशेषिक सूत्र ५/२/१८)। इस मुक्ति की प्राप्ति तत्त्व ज्ञान से ही होती है। वैशेषिक मत ज्ञानकर्मसमुच्चयवाद को प्रश्रय नहीं देता, वह ज्ञानवाद का समर्थक है। निष्काम कर्म तत्त्वज्ञान में सहायक मात्र है। निवृत्ति रूप धर्म से प्रसूत, द्रव्यादि षट् पदार्थों के साधर्म्य और वैधर्म्य से उत्पन्न तत्त्वज्ञान मोक्ष का साधन है (वै.सू. १/१/४)।

यद्यपि वैशेषिक दर्शन के सिद्धान्त तार्किक दृष्टि से सर्वमान्य नहीं हैं, परन्तु आधुनिक भौतिक विज्ञान के समान वैशेषिक द्वारा भौतिक जगत् की समीक्षा लौकिक दृष्टि से नितान्त उपादेय है। तत्त्वप्रासाद की इन आरम्भिक सीढ़ियों के द्वारा ही अद्वैत तत्त्व की उपलब्धि संभव है।

**सांख्यदर्शन** - भारतीय दर्शनों में 'सांख्य' प्राचीन तथा महत्त्वपूर्ण माना जाता है। सांख्य दर्शन के प्रवर्तक महर्षि कपिल हैं। तत्त्वों की सर्वप्रथम गणना इस दर्शन में की गई जिनका ज्ञान मोक्ष में सहायक है। गणना का नाम संख्या है और संख्या की प्रधानता रहने से इस दर्शन का नाम 'सांख्य' पड़ा है। संख्या का एक अर्थ है 'विवेकज्ञान'। प्रकृति तथा पुरुष के विषय में अज्ञान होने से संसारभाव है और जब साधक को इन दोनों का विवेकज्ञान-पुरुष प्रकृति से भिन्न और स्वतंत्र है, हो जाता है तब वह मुक्त हो जाता है। इसी विवेकज्ञान की प्रधानता होने से इस दर्शन को 'सांख्य' कहा जाता है।

उपनिषदों में संकेतित सिद्धान्तों का शास्त्रीय विवेचन सर्वप्रथम कपिल मुनि ने किया। उपनिषत्कालिक सांख्य वेदान्तमिश्रित था। उसे पृथक् कर स्वतन्त्र दर्शन के महत्त्वपूर्णपद पर प्रतिष्ठित करने का श्रेय कपिल मुनि को ही है। अतः उन्हें 'आदि विद्वान्' की महनीय उपाधि से विभूषित किया गया है। कपिल मुनि की दो कृतियों का संकेत मिलता है- तत्त्वसमास तथा सांख्यसूत्र। 'तत्त्वसमास' केवल २२ लघुसूत्रों का समुच्चय है। सांख्यसूत्र में ६ अध्याय और ५३७ सूत्र हैं। अनेक विद्वानों की दृष्टि में तत्त्वसमास सांख्यदर्शन का प्राचीनतम ग्रन्थ है। कपिल मुनि के पश्चात् सांख्यमत के उन्नायकों में आसुरि, पञ्चशिख और ईश्वरकृष्ण प्रमुख हैं। इनमें ईश्वरकृष्ण की 'सांख्य कारिका' सांख्य दर्शन का लोकप्रिय तथा प्रामाणिक ग्रन्थ है।

सांख्य दर्शन के अनुसार २५ तत्त्व हैं। इन पचीस तत्त्वों को चार रूपों में वर्गीकृत

किया जाता है-(१) प्रकृति (२) विकृति (३) प्रकृति-विकृति (४) न प्रकृति न विकृति। इनमें प्रकृति १, विकृति १६, प्रकृति-विकृति ७ और न प्रकुति न विकृति १, कुल २५ तत्त्व हैं। २५ तत्त्वों में २४ प्रकृति तत्त्व और १ पुरुष तत्त्व है। इन्हीं २५ तत्त्वों की गणना सांख्य दर्शन में हुई है। कार्यकारण के विषय में सांख्य का एक विशिष्ट मत है जो 'सत्कार्यवाद' के नाम से प्रसिद्ध है। सांख्य दर्शन कारणव्यापार से पूर्व भी कार्य की सत्ता स्वीकार करता है। न्याय-वैशेषिक कार्य को कारणव्यापार से पूर्व असत् मानता है। सत्यकार्यवाद के दो रूप है-(१) परिणामवाद और (२) विर्वतवाद। परिणामवाद में कारण से उत्पन्न कार्य वास्तव होता है, यथा दूध से दही। विवर्तवाद में दृश्यमान कार्य वास्तव न होकर आभास मात्र होता है। सांख्य को परिणामवाद ही अभीष्ट है।

सांख्य दर्शन का २५ वाँ तत्त्व पुरुष है जो स्वयंसिद्ध और अनेक है। सांख्य युक्तिपूर्वक पुरुष की अनेकता सिद्ध करता है। प्रकृति और पुरुष के संयोग से ही विश्व की सृष्टि होती है। प्रकृति जड़ है और पुरुष निष्क्रिय। केवल जड़ प्रकृति या निष्क्रिय पुरुष से सृष्टि कार्य संभव नहीं हैं अतः प्रकृति-पुरुष दोनों का संयोग ही सृष्टि का उत्पादक होता है। प्रलय दशा में त्रिगुणत्मिक का प्रकृति साम्यावस्था में रहती है। उसके तीनों गुण समभाव में रहते हैं, पुरुष से संयुक्त होते ही इन तीनों गुणों में क्षोभ उत्पन्न होता है। तीनों विषम भाव में आ जाते हैं। प्रकृति की इसी विषमावस्था में सृष्टिकार्य प्रारम्भ होता है। सांख्यमत में प्रमेयज्ञान के लिए प्रत्यक्ष, अनुमान और शब्द ये तीन प्रमाण माने गये हैं।

सांख्य दर्शन में दो ही मूल तत्त्व हैं पुरुष तथा प्रकृति। पुरुष चेतन, निर्गुण निष्क्रिय और द्रष्टा है। प्रकृति जड़, सक्रिय और त्रिगुणात्मिका है। पुरुष स्वभावतः असंग और मुक्त है, परन्तु अविवेक के कारण उसका प्रकृति से संयोग होता है। इस संयोग से प्रकृतिजन्य दु:ख से पुरुष प्रतिबिम्बित होता है। यही पुरुष का संसारभाव है। इसीलिए संसारभाव का मूल कारण अविवेक है और संसारभाव या दुःख की निवृत्ति का साधन विवेक है। (सांख्यसूत्र/३/६५) के अनुसार अपवर्ग-(मोक्ष) का स्वरूप है- प्रकृति पुरुष का परस्पर वियुक्त होना अथवा पुरुष की प्रकृति से पृथक् स्थिति। शरीरनाश के बाद पुरुष ऐकान्तिक तथा आत्यन्तिक दुःखमय के विनाश को प्राप्त करता है। इसी अवस्था की शास्त्रीय संज्ञा विदेह मुक्ति है। सांख्य की पदार्थमीमांसा वैशेषिकों की तत्त्वमीमांसा की अपेक्षा अधिक युक्तिसंगत है। सांख्य का तत्त्व विश्लेषण दूरगामी तथा तलस्पर्शी है। यह द्वैतवादी दर्शन है।

**योगदर्शन**-'योग' आर्यजाति की प्रचीनतम विद्या है जिसमें विवाद को प्रश्रय नहीं मिला है। योग ही सर्वोत्तम मोक्षोपाय है। भवतापसन्तप्त जीव को ईश्वर से मिलाने में योग ही भक्ति और ज्ञान का प्रधान साधन है। चित्तवृत्तियों का निरोध ही योग है- 'योगश्चित्तवृत्ति-निरोधः'। यद्यपि उपलब्ध योगसूत्रों के रचयिता महर्षि पतञ्जलि माने जाते है, किन्तु योग पतञ्जलि से भी प्राचीन अध्यात्म-प्रक्रिया है। संहिताओं, ब्राह्मणों तथा

उपनिषदों में अनेकत्र इसका संकेत एवं विवेचन उपलब्ध है। योग सांख्य-अभिमत तत्त्व को स्वीकारता है, परन्तु ईश्वर की सत्ता मानकर उसे छब्बीसवाँ तत्त्व मानता है। इसीलिए योग को 'सेश्वर सांख्य' भी कहा जाता है।

योगदर्शन में चार पाद हैं, जिनकी सूत्रसंख्या १९५ है। प्रथम समाधिपाद में समाधि के रूप तथा भेद, चित्त एवं उनकी वृत्तियों का वर्णन हैं। द्वितीय साधनपाद में क्रियायोग, क्लेश तथा अष्टांग योग वर्णित हैं। तृतीय विभूतिपाद में धारणा, ध्यान और समाधि के अनन्तर योग के अनुष्ठान से उत्पन्न विभूतियों का वर्णन हैं और चतुर्थ कैवल्य पाद में समाधिसिद्धि, विज्ञानवादनिराकरण और कैवल्य का निर्णय किया गया है। पातञ्जल योग-सूत्र पर 'व्यासभाष्य' अत्यन्त प्रामाणिक ग्रन्थ है। योग-सूत्रों के गूढ़ रहस्यों को व्यक्त करने में यह भाष्य अत्यन्त उपयोगी है। योग-सूत्रों की अनेक टीकाएँ हैं जिनमें भोजकृत 'राजमार्तण्ड' (भोजवृत्ति), भावावेश की 'वृत्ति', रामानन्द यति की 'मणिप्रभा', अनन्त पण्डित की 'योगचन्द्रिका', सदाशिवेन्द्र का 'योगसुधारक' और नागोजि भट्ट की 'लघ्वी' और 'बृहती' वृत्तियाँ प्रसिद्ध हैं। वाचस्पति मिश्र ने व्यास भाष्य पर 'तत्त्ववैशारदी' टीका लिखकर योग के तत्त्वों को सरल एवं सुबोध बनाया है। इस टीका में योगसूत्र तथा व्यासभाष्य के पारिभाषिक शब्दों का विस्तृत परिष्कार किया गया है।

'योग' शब्द समाध्यर्थक युज् धातु से निष्पन्न होता है जिसका अर्थ है समाधि। पतञ्जलि का योगलक्षण है- 'योगश्चित्तवृत्तिनिरोधः'। अर्थात् चित्त की वृत्तियों को रोकना। चित्त से अभिप्राय अन्तःकरण (मन, बुद्धि, अहंकार) है। चित्त सत्त्वप्रधान प्रकृति-परिणाम है। चित्त प्राकृत होने से जड़ और प्रतिक्षण परिणामशाली है। इस चित्त की ५ भूमियाँ या अवस्थायें होती हैं- क्षिप्त, मूढ़, विक्षिप्त, एकाग्र और निरुद्ध। चित्त की वृत्तियाँ भी प्रमुखतया पाँच हैं- प्रमाण, विपर्यय, विकल्प, निद्रा और स्मृति। चित्त की समस्त अवस्थाओं का अन्तर्भाव इन्हीं पाँचों वृत्तियों में हो जाता है। योगसिद्धि में चित्तवृत्तियों के साथ ही उनके संस्कारो का भी निरोध आवश्यक है। अतः चित्त की स्थूल वृत्तियों और सूक्ष्म-संस्कारों के निरोध होने पर ही योग की पूर्णता सिद्ध होती है।

योगदर्शन में समाधि के दो भेद माने गये हैं- सम्प्रज्ञात तथा असम्प्रज्ञात। 'एकाग्रता' चित्त की वह अविचल अक्षुब्ध अवस्था है जब ध्येय वस्तु के ऊपर चित्त चिरकाल तक रहता है। इस योग का नाम सम्प्रज्ञात समाधि है, क्योंकि इस अवस्था में चित्त के समाहित होने के लिए कोई न कोई आलम्बन बना रहता है। परन्तु निरुद्ध दशा में असम्प्रज्ञात समाधि का उदय होता है, जब चित्त की समस्त वृत्तियाँ निरुद्ध हो जाती हैं। यहाँ कोई भी आलम्बन नहीं रहता। अतः इसे असम्प्रज्ञात समाधि कहा जाता है। ध्येय वस्तु का ज्ञान बने रहने के कारण पूर्व समाधि को 'सम्प्रज्ञात' और ध्येय, ध्यान, ध्याता के एकाकार हो जाने से द्वितीय समाधि को 'असम्प्रज्ञात' कहा जाता है। योग दर्शन का चरमलक्ष्य है आत्म-दर्शन।

योग दर्शन में ईश्वर का स्थान महत्त्वपूर्ण है। योग में जो पुरुष-विशेष क्लेश, कर्मविपाक तथा आशय से असम्पृक्त रहता है, वह ईश्वर कहलाता है-'क्लेशकर्म-विपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः'। योग के आचार्य ने ईश्वरसिद्धि में श्रुति-शब्द प्रमाण को सर्वोत्कृष्ट माना है। सांख्य के साथ सिद्धान्तसाम्य होने पर भी योग ईश्वर को मानता है। इस ईश्वर की उपयोगिता योग-साधन में मौलिक है, क्योंकि ईश्वर-प्रणिधान से ही समाधि की सिद्धि होती है। ईश्वर गुरुओं का भी गुरु है अतः तारक ज्ञान का दाता साक्षात् ईश्वर ही है।

मानव जीवन के आध्यात्मिक उत्कर्ष में योग अत्यन्त उपयोगी दर्शन है। भारतीयों ने इस दर्शन का अनुशीलन विज्ञान की भाँति किया है और इसे उन्नति के चरम शिखर पर पहुँचाया है। काय और चित्त के मलों से मुक्त कर पुरुष की आध्यात्मिक समुन्नति में उपयोग करने की शिक्षा योग से ही मिलती है। आज पाश्चात्त्य मनोविज्ञानिकों तथा चिकित्सकों का भी ध्यान योग की ओर आकृष्ट हुआ है, जिससे उसका विपुल प्रचार पाश्चात्त्य जगत् में भी हो रहा है।

**मीमांसादर्शन**-'मीमांसा' शब्द का अर्थ किसी वस्तु के स्वरूप का यथार्थ वर्णन है। वेद के मुख्यतः दो भाग है- कर्मकाण्ड तथा ज्ञानकाण्ड। यज्ञयागादि की विधि तथा अनुष्ठान का वर्णन कर्मकाण्ड का विषय है और जीव, जगत् तथा ईश्वर के रूप और परस्पर सम्बन्ध का निरूपण ज्ञानकाण्ड का विषय है। मीमांसा के दो प्रकार हैं-कर्ममीमांसा और ज्ञानमीमांसा। कर्ममीमांसा तथा पूर्वमीमांसा के नाम से अभिहित दर्शन 'मीमांसा' कहा जाता है। ज्ञानमीमांसा तथा उत्तरमीमांसा के नाम से प्रसिद्ध दर्शन 'वेदान्त' कहलाता है। मीमांसा दर्शन पूर्णतया वैदिक है। 'मीमांसते' क्रियापद तथा 'मीमांसा' संज्ञापद-दोनों का प्रयोग ब्राह्मण तथा उपनिषद्-ग्रन्थों में मिलता है। अतः मीमांसा दर्शन का सम्बन्य अत्यन्त प्राचीन काल से सिद्ध होता है। मीमांसा का प्रतिपाद्य विषय धर्म का विवेचन है-'धर्माख्यं विषयं वस्तु मीमांसायाः प्रयोजनम्'। (श्लोकवार्तिक, श्लोक११) वेदविहित इष्टसाधन धर्म है और वेदविपरीत अनिष्टसाधन अधर्म है। इस जगत् में कर्म ही सर्वश्रेष्ठ है। कर्म करने से फल अवश्यमेव उत्पन्न होता है। भगवान् बादरायण ईश्वर को कर्मफल का दाता मानते हैं, किन्तु मीमांसा दर्शन के आदि आचार्य जैमिनि कर्म को फलदाता मानते है। उनके अनुसार यज्ञकर्म से ही तत्तत् फल उत्पन्न होते हैं। मीमांसा दर्शन में 'अपूर्व' नामक सिद्धान्त प्रतिपादित है। कर्म से उत्पन्न होता है फल। इस प्रकार अपूर्व ही कर्म और कर्मफल को बाँधने वाली श्रृखंला है। मीमांसा दर्शन वेद को नित्य मानता है।

कर्म तथा ज्ञान के विषय में कर्ममीमांसा और वेदान्त की दृष्टि में अन्तर है। वेदान्त के अनुसार कर्मत्याग के बाद ही आत्मज्ञान संभव है। कर्म तो केवल चित्तशुद्धि का साधन है। मोक्ष की प्राप्ति तो ज्ञान से ही हो सकती है। परन्तु कर्ममीमांसा के अनुसार मुमुक्षुजन

को भी कर्म करना चाहिए। वेदविहित कर्मों के अनुष्ठान से कर्मबन्धन स्वतः समाप्त हो जाता है। अतः कर्म का अनुष्ठान अभीष्ट है, कर्म का परित्याग नहीं। इसीलिए वैदिक दर्शन का प्राणतत्त्व मीमांसा दर्शन ही है। जैमिनि मीमांसा दर्शन के सूत्रकार हैं। मीमांसा दर्शन में १६ अध्याय हैं जिनमें प्रथम १२ अध्याय 'द्वादशलक्षणी' के नाम से विख्यात है। इस दर्शन की सूत्रसंख्या २६४४ और अधिकरणसंख्या ६०६ हैं। इसी द्वादशलक्षणी पर वृत्ति, भाष्य तथा वार्तिक की रचना कालान्तर में हुई। इसके सर्वाधिक प्राचीन वृत्तिकार उपवर्ष हैं। शबरस्वामी (२०० ई.) ने मीमांसा के १२ अध्यायों पर भाष्य लिखकर इस दर्शन के गम्भीर तत्त्वों का विवेचन प्रस्तुत किया। मीमांसा दर्शन के इतिहास में कुमारिल भट्ट एक नवीन युग के उद्भावक हैं। आस्तिक दर्शन में मीमांसा को स्थापित करने का श्रेय कुमारिल भट्ट को ही है। कुमारिल भट्ट मीमांसा दर्शन में मौलिक कल्पना, विशद व्याख्या तथा अलौकिक प्रतिभा के कारण सदा स्मरणीय रहेंगे। शाबरभाष्य पर कारिकाबद्ध विपुलकाय 'श्लोकवार्तिक' नामक ग्रन्थ कुमारिल की महनीय देन है। मीमांसा दर्शन वेद को अपौरुषेय मानता है। मीमांसा की दृष्टि में वेद की नित्यता का सर्वश्रेष्ठ प्रमाण शब्दों की नित्यता है। वेद नित्यशब्दसमूह है अतः नित्य है। मीमांसा सत्य को स्वतः प्रकाश्य मानती है। सत्य को सिद्ध करने के लिए किसी अन्य प्रमाण की अपेक्षा नहीं होती। मीमांसक स्वतःप्रामाण्यवाद के समर्थक हैं। तत्त्वज्ञान की दृष्टि से मीमांसा जगत्-प्रपञ्च की नित्यता स्वीकार करती है, परन्तु पदार्थों की कल्पना में प्रभाकर, कुमारिल और मुरारि एकमत नही हैं। प्रभाकर आठ प्रमाण स्वीकार करते हैं। कुमारिल के अनुसार पदार्थों की संख्या केवल पाँच ही है। मुरारि की पदार्थ कल्पना दोनों से भिन्न है। उनके अनुसार ब्रह्म ही एक परमार्थभूत पदार्थ है, किन्तु लौकिक व्यवहार की उत्पत्ति के लिए अन्य भी चार पदार्थ हैं।

मीमांसा कार्य-कारण के सम्बन्ध की व्याख्या में नवीन दृष्टि अपनाती है। उसके अनुसार कार्य की उत्पत्ति के लिए कारण के अतिरिक्त शक्ति भी स्वीकार करनी चाहिए, क्योंकि शक्ति एक विशिष्ट पदार्थ है। वैदिक कर्मों का फल स्वर्गप्राप्ति है। निरतिशय सुख का ही दूसरा नाम स्वर्ग है। 'स्वर्गकामो यजेत' इस वाक्य से यज्ञसम्पादन का प्रयोजन स्वर्गकामना ही है। कर्मकाण्ड की उपादेयता मीमांसा को मान्य है अतः वह कर्म को ही ईश्वर मानती है अतएव प्रचीन मीमांसा निरीश्वरवादी प्रतीत होती है।

मीमांसादर्शन में मोक्ष का भी सूक्ष्म विवेचन हुआ है। 'प्रपञ्चसम्बन्धविलयो मोक्षः' यह मीमांसासम्मत मोक्षलक्षण है। अर्थात् इस जगत् के साथ आत्मा के सम्बन्ध के विनाश का नाम मोक्ष है। वैदिक धर्म के ज्ञान के लिए मीमांसा दर्शन का अनुशीलन अत्यन्त उपादेय है।

संस्कृत साहित्य के बृहद् इतिहास के इस नवम खण्ड के प्रकाशन के सन्दर्भ में उत्तर प्रदेश शासन (भाषा विभाग) के अधिकारियों तथा संस्कृत संस्थान की कार्यकारिणी समिति

के सदस्यों को मैं हार्दिक साधुवाद देता हूँ, जिनके सार्थक सहयोग एवं उत्साहवर्धन से प्रस्तुत खण्ड का प्रकाशन यथासमय सम्पन्न हो सका है। संस्कृत संस्थान की वर्तमान निदेशक **डॉ. (श्रीमती) अलका श्रीवास्तव, पूर्वनिदेशक श्री मधुकर द्विवेदी,** तथा सहायक निदेशक **डा. चन्द्रकान्त द्विवेदी** बधाई के पात्र हैं, जिनकी सतत जागरूकता संस्थान-द्वारा प्रवर्तित संस्कृत-अभ्युत्थान के कार्यक्रम की सफलता में विशेष भूमिका निभाती है।

इस खण्ड के सम्पादक **डॉ. गजानन शास्त्री मुसलगाँवकर** अध्यात्मविद्या के मर्मज्ञ मनीषी हैं। इनके वैदुष्यपूर्ण सम्पादकत्व में प्रस्तुत ग्रन्थ का प्रकाशन विशेष महत्त्वपूर्ण है अतः **डॉ. मुसलगाँवकर** को मैं हृदय से धन्यवाद देता हूँ। इस खण्ड के विद्वान् लेखक भी बधाई के पात्र हैं, जिनका अमूल्य लेखन-कार्य ग्रन्थ की गौरववृद्धि में विशेष उपादेय है। साथ ही में उन समस्त साहित्य-सेवी मनीषियों के प्रति भी कृतज्ञ हूँ, जिनकी साहित्य-सम्पदा के प्रत्यक्ष या परोक्ष उपयोग से ग्रन्थ की पूर्णता संभव हो सकी है।

इस नवम खण्ड के सम्पादन में मेरे स्नेहभाजन शिष्य **डॉ. रमाकान्त झा** का अपेक्षित सहयोग उपादेय है अतः **डॉ. झा** मेरे हार्दिक आशीर्वाद के पात्र हैं।

अन्त में मैं **'शिवम् आर्ट'** के व्यवस्थापक **द्विवेदि बन्धुओं** के प्रति अपनी शुभाशंसा व्यक्त करता हूँ, जिनका सक्रिय सहयोग इस ग्रन्थ के निर्विघ्न मुद्रण में सहायक सिद्ध हुआ है।

काशी **बलदेव उपाध्याय**

अक्षयतृतीया सं. २०५६ वि.
१८ अप्रैल, १९९९ ई.

# भूमिका

## न्यायदर्शनम् (नित्यात्मवादः)

न्यायदर्शनस्य मूलप्रवर्तको न्यायसूत्रलेखकोऽक्षपादापरनामधेयो गौतममहर्षिरस्ति। इदं न्यायदर्शनं पञ्चसु अध्यायेषु विभक्तं वर्तते। एकैकोऽध्यायः पुनरपि द्विधा विभजितः, यस्य 'आह्निकम्' इति संज्ञा विहिताऽस्ति। प्रत्यध्यायमाह्निकद्वयम् अस्मिन् दर्शने षोडश (१६) पदार्था अभिहिताः। उद्देश्य-लक्षण-परीक्षाद्वारा चर्चितानां षोडशपदार्थानां तत्त्वज्ञानेन दुःखध्वंसो भवति, तेन च मोक्षोपलब्धिर्भवति।

**प्रथमाध्ययस्य** प्रथमाह्निके महर्षिणा गौतमेन प्रमाणादिपदार्थनवकलक्षणनिरूपणं विधाय, द्वितीये वादादिसप्तपदार्थलक्षणनिरूपणं कृतम्।

**द्वितीयाध्यायस्य** प्रथमाह्निके संशयपरीक्षणानन्तरं प्रमाण-सामान्य-विशेषप्रतिपादनपराणि अष्टौ प्रकरणानि सन्ति। अस्मिन् आह्निके सूत्रसंख्या अष्टषष्टिर्विद्यते। द्वितीयाह्निके प्रमाणचतुष्टयं, शब्दनित्यत्वं, शब्दपरिणामः, शब्दपरीक्षा चेति चत्वारि प्रकरणानि सन्ति। अस्मिन् आह्निके सूत्रसंख्या सप्तषष्टिरस्ति।

**तृतीयाध्यायस्य** प्रथमाह्निके सूत्राणां संख्या द्वासप्ततिर्वर्तते। द्वितीयाह्निके नवसप्ततिः सूत्राणि सन्ति। तार्तीयस्य प्रथमाह्निके आत्मशरीरेन्द्रियार्थपरीक्षणम्। द्वितीयाह्निके च बुद्धिमनः-परीक्षणम्।

**चतुर्थाध्यायस्य** प्रथमाह्निके अष्टाषष्टिः सूत्राणि चतुर्दश च प्रकरणानि सन्ति। द्वितीयाह्निके षट् प्रकरणानि विद्यन्ते। असिमन्नाह्निके अष्टचत्वारिंशत्सूत्राणि सन्ति।

**पञ्चमाध्यायस्य** प्रथमाह्निके त्रयश्चत्वारिंशत् सूत्राणि वर्तन्ते तत्र जातिषट्क-प्राप्तिसत्रादीनि सप्तदशप्रकरणानि सन्ति। द्वितीयाह्निके च चतुर्विंशतिः सूत्रसंख्याऽस्ति। द्वितीये आह्निके षट् प्रकरणानि सन्ति। तत्र निग्रहस्थानभेदनिरूपणं विहितं विद्यते।

कस्यापि पदार्थस्य स्वरूपं साधयितुं प्रमाणानि आवश्यकानि भवन्ति अथ च तल्लक्षणान्यपि। वस्तुतो न्यायदर्शनमिदं पदार्थावबोधं कारयति। अस्य न्यायदर्शनस्य नामान्तरम् 'आन्वीक्षिकी विद्याऽपि' अस्ति। न्यायशास्त्रीयपदार्थानां तत्त्वतो ज्ञानेन आत्मसाक्षात्कारोऽपि भवति। वेदान्तशास्त्रीयपदार्थानामवगमेनापि आत्मसाक्षात्कारो भवति, किन्तूभयोः प्रक्रिया विभिन्ना विद्यते। एवं च परमपुरुषार्थरूपस्य मोक्षस्याधिगमे पदार्थविज्ञानमेव प्रमुखं साधनमिति न्यायदर्शनसिद्धान्तः। शास्त्रस्य परिचये प्राप्ते सति अनेके प्रश्नाः प्रादुर्भवन्ति-

| प्रश्नाः | उत्तराणि- |
|---|---|
| (१) किं ज्ञेयम्? | प्रमाणाद्याः षोडशपदार्थाः। |
| (२) कीदृशो ज्ञाता? | ज्ञानसुखादिगुणवान् नित्यः। |
| (३) अज्ञानस्य स्वरूपं किम्? | अनित्येषु देहादिषु आत्मत्वबुद्धिः। |

(४) दुःखस्य स्वरूपं किम्? तादृशबुद्धिजन्य आत्मगुणविशेषः।
(५) ज्ञानस्य स्वरूपं किम्? आत्मनि नित्यत्वभावना।
(६) दुःखध्वंसस्य (मोक्षस्य) स्वरूपं किम्? आत्मन्येव दुःखस्य चरमो नाशः।
एतेषु प्रमाणं किम्? प्रत्यक्षानुमानोपमानशब्दाः।

**बाह्याः षोडश सन्ति मानसुमिता भावाः पदार्थाः पराः**
**एतेषां मननात् समस्तजगतीदुःखाद् विमुक्तिर्भवेत्।**
**जीवा भिन्नधियः प्रमाणपटवो नैयायिकानां नये**
**प्रत्यक्षं त्वनुमा तथा ह्युपमितिः शब्दश्च मानं मतम्।।**

न्यायदर्शने ज्ञेयत्वेन व्यपदिष्टाः षोडश पदार्थाः। इमे प्रमाणप्रमेयसंशयप्रयोजन-दृष्टान्त सिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानात् निःश्रेयसाधिगमः (गौ.सू.१)। इति सूत्रेऽभिहिताः।

## वैशेषिकदर्शनम्

वैशेषिकदर्शनस्य रचयिता महर्षिः कणादोऽस्ति। अयं खलु कपोतवृत्त्या जीवननिर्वाहं करोतिस्म। महर्षिरयं कश्यपमुनेः पुत्रः स्यादिति प्रतीयते। तत्समर्थनपरं 'अलिगं काश्यपोऽब्रवीत्' सूत्रं तथा 'कणादः काश्यपः समौ' इति-त्रिकाण्डकोशोऽपि वर्तते।

वैशेषिकदर्शनानुसारेण जगति षट् भावपदार्थाः सन्ति। अभावोऽपि एकः पदार्थस्तं गृहीत्वा सप्तपदार्था अपि वक्तुं शक्यते। अत्र दर्शने 'विशेष' पदार्थांगीकारेणेदं दर्शनं 'वैशेषिकदर्शनम्' इति नाम्ना व्यवह्रियते। उलूकपक्षिणो रूपं गृहीत्वा परमेश्वरः द्रव्यादिपदार्थानुपदिदेशेतिकृत्वा एतद्रचितं दर्शनं-'औलूक्यदर्शनम्' इति नाम्नाऽपि व्यवह्रियते जनैः। न्याय-वैशेषिकदर्शनयोरनेकेषु पदार्थज्ञान-परमाणु-व्याप्ति हेत्वाभास जीवात्मेत्यादिविषयेषु प्रायशः साम्यमेव।

दर्शनमिदं दशसु अध्यायेषु विभक्तमस्ति। प्रत्यध्यायमाह्निकद्वयं विद्यते। अत्र दर्शने सूत्राणां संख्या त्रिशतोत्तरसप्ततिः (३७०) वर्तते।

महर्षिरयं प्रथमसूत्रेण धर्मव्याख्यां प्रतिज्ञाय 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म' इति धर्मलक्षणं प्रतिपादितवान्। प्रथमाध्यायस्य प्रथमाह्निके वेदमूलकं धर्मं प्रतिपाद्य द्रव्य-गुण-कर्म-पदार्थानां त्रयाणां निरूपणं कृतम्।

द्वितीये आह्निके द्रव्य-गुण-कर्मसु कार्य-कारणभावः प्रतिपादितः।

**द्वितीयाध्यायस्य** प्रथमाह्निके पृथ्वी-जल-तेजोवाय्वादिनवसंख्याकानां द्रव्याणां लक्षणानि प्रतिपादितानि सन्ति।

द्वितीयाध्यायस्य द्वितीये आह्निके गन्धादिगुणानां स्वाभाविकत्वमौपाधिकत्वञ्च प्रतिपादितमस्ति।

**तृतीयाध्यायस्य** प्रथमाह्निके आत्मतत्त्वस्य परीक्षणं विधाय द्वितीयाह्निके मनस्तत्त्वस्य परीक्षां कृत्वा तद् द्वारा हेतुतदाभासानाञ्च भेदाः प्रदर्शिताः।

**चतुर्थाध्याये** प्रथमाह्निके सतां नित्यानामकारणवताम्परमाणूनां मूलकारणत्वं वर्णितमस्ति। अर्थात् प्रकृतेः जगन्मूलकारणत्वं नास्ति।

द्वितीयाह्निके पृथिव्यादिचतुर्णां कार्यद्रव्याणां विभागं प्रतिपादितवान्।

**पञ्चमाध्याये** प्रथमाह्निके उत्क्षेपणादिकर्मणां निरूपणं कृतम्। द्वितीयाह्निके विधिविहितानां कर्मणां विवेचनं कृतवान्।

**षष्ठेऽध्याये** प्रथमाह्निके धर्माधर्मयोः परीक्षणं विहितवान्। द्वितीयाह्निके कर्मजनितानां दृष्टादृष्टफलानां विवेचनं कृतम्।

**सप्तमाध्यायस्य** प्रथमाह्निके नित्यानित्यगुणानां परीक्षणं, तथा द्वितीयाह्निके एकानेकवृत्तिमतां अनेकमात्रवृत्तिमतां गुणानां परीक्षणं शब्दार्थसम्बन्धस्य समवायस्य च विवेचनं कृतमस्ति।

**अष्टमेऽध्याये** प्रथमाह्निके लौकिकसन्निकर्षजन्यज्ञाननिष्पत्तिं तत्क्रमं च वर्णितवान्। द्वितीयाह्निके विशिष्टप्रत्यक्षज्ञानस्य प्रतिपादनं कृतवान्।

**नवमाध्याये** प्रथमाह्निके योगिप्रत्यक्षस्य अयोगिप्रत्यक्षस्य च निरूपणं विहितमस्ति। द्वितीयाह्निके प्रत्यक्षानुमानाभ्यां जनिते लैंगिकज्ञाने भेदम्प्रदर्श्य प्रमाणानां भागद्वयं वर्णितमस्ति।

**दशमाध्यायस्य** प्रथमाह्निके सुख-दुःखयोः परीक्षणं विहितवान्। द्वितीयाह्निके त्रिविधानि कारणानि प्रतिपादितानि।

## वैशेषिक-न्यायदर्शनस्थ-सिद्धान्तानां तुलनात्मिका तालिका

| | काणादं वैशेषिकदर्शनम् | गौतमीयं न्यायदर्शनम् |
|---|---|---|
| १. | अध्यात्मसहायकस्तर्कः। | तर्कस्यैव प्राधान्यम्। |
| २. | तर्कानुकूलं वेदवाक्यं प्रमाणम्। यथा-शरीरमेकभूतनिर्मितम्, न पाञ्चभौतिकम्। | तर्कानुकूलं वेदवाक्यं प्रमाणम्, यथा-दुःखाभाव एव मोक्षः। |
| ३. | षट्पदार्थाभ्युपगमः | षोडशपदार्थाभ्युपगमः। |
| ४. | प्रत्यक्षानुमाने द्वे एव प्रमाणे। | चत्वारि प्रमाणानि। |
| ५. | द्वित्वमपेक्षाबुद्धिजन्यम्। | द्वित्वमपेक्षाबुद्धिज्ञाप्यम्। |
| ६. | पीलुपाकवादी। | पिठरपाकवादी। |
| ७. | कर्मज-विभागजभेदेन विभागो द्विविधः। | विभागः कर्मज एव |
| ८. | समवायः अतीन्द्रियः अनुमेयश्च। | समवायः प्रत्यक्षविषयः। |
| ९. | जीवात्मा अनुमेयः। | जीवात्मा मानसप्रत्यक्षविषयः। |
| १०. | तद्वचनादाम्नायस्य प्रामाण्यम्। | ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्। |

## वैशेषिकदर्शनोक्तसिद्धान्तानां प्रश्नोत्तररूपेण प्रदर्शनम्

| प्रश्नाः | उत्तराणि |
|---|---|
| (१) किं ज्ञेयम्? | (१) सप्त पदार्थाः। |
| (२) कीदृशो ज्ञाता? | (२) ज्ञानाधिकरणम्। |
| (३) अज्ञानस्य किं स्वरूपम्? | (३) आत्मगुणविशेषः विनश्वरेषु शरीरादिषु आत्माभिमानरूपः। |
| (४) दुःखस्य किं स्वरूपम्? | (४) आत्मविशेषगुणः प्रतिकूलवेदनीयः। |
| (५) ज्ञानस्य किं स्वरूपम्? | (५) आत्मविशेषगुणः अहं नित्य इति भावनारूपः। |
| (६) दुःखध्वंसस्य (मोक्षस्य) स्वरूपं किम्? | (६) एकविंशतिदुःखानामभावविशेषः। |
| (७) एतेषु प्रमाणं किम्? | प्रत्यक्षमनुमानं च। |

**सिद्धो भावगणो यथैव मतितोऽभावोऽपि सिद्धस्तथा**
**ते नित्या अणवो निदानमपरा विश्वस्य कार्यस्य च।**
**नित्या जीवगणाः स्वतन्त्रजगतीनाथस्य नित्यं वशाः**
**मोक्षः पूर्ववदाद्यमानयुगलं वैशेषिकाणां नये।।**

## सांख्यदर्शनम् (अखण्डप्रकाशात्मवादः)

अस्ति सांख्यदर्शनस्य प्रवर्तयिता आद्यमुनिः कपिलः। श्रीकपिलमुनिप्रणीतं 'सांख्यसूत्रम्' 'तत्त्वसमाससूत्रं' च, तथा ईश्वरकृष्णविरचिता 'सांख्यकारिका' चेति ग्रन्था आधुनिके काले उपलभ्यन्ते। श्रीकपिलप्रणीतं 'सांख्यसूत्रम्' षट्सु अध्यायेषु विभक्तमस्ति। अस्मिन् षडध्यायात्मके 'सांख्यसूत्रग्रन्थे' सूत्रसंख्या पञ्चशतोत्तरसप्तविंशतिर्वर्तते, तथा ईश्वरकृष्णरचितसांख्यकारिकायां कारिकासंख्या द्वासप्ततिरस्ति। कपिलप्रणीते 'तत्त्वसमाससूत्रे' सूत्रसंख्या पञ्चविंशतिर्विद्यते।

भारतीयदर्शनेषु 'सांख्यदर्शनस्य' महत्त्वपूर्णं स्थानमिति प्रथितमेव। 'निरीश्वरं सांख्यम्' इति केषाञ्चिदवधारणाऽपि वर्तते, किन्तु सा भ्रमपूर्णेव।

सांख्यदर्शने 'पुरुष'शब्दः पारिभाषिक इति नैव विस्मर्तव्यम्। अत्र 'चेतनतत्त्वं' सूचयितुं प्रयुक्तः 'पुरुष' शब्दः। अस्मिन् दर्शने चेतनाऽचेतनात्मकद्विविधतत्त्वस्याभ्युपगमः। अस्य दर्शनस्य प्रधानलक्ष्यन्तु प्रकृतेस्तद्विकारजातस्य च विस्तरेण विवेचनमस्ति। अत एव प्रकृत्यात्मकजडतत्त्वसहितं तद्विकारजातं गणयित्वा पञ्चविंशतिः पुरुषः इत्युक्त्वा चेतनतत्त्वम्प्रतिपादितम्। अर्थात् जडवर्ग इव चेतनवर्गोऽप्यस्तीत्यभिप्रायः। अयं चेतनवर्गोऽपि परमात्मपुरुषरूपेण जीवात्मपुरुषरूपेण च द्विधा विभक्तोऽस्ति।

कपिलसांख्यसूत्रस्य चत्वारो व्याख्याग्रन्थास्तथैव 'तत्त्वसमाससूत्रे'ऽपि व्याख्याग्रन्थाः। सांख्यसङ्ग्रहपुस्तके कतिपयलघुकायग्रन्थानां समावेश उपलभ्यते। सांख्यकारिकायां, सत्स्वपि बहुषु व्याख्याग्रन्थेषु श्रीमद्वाचस्पतिमिश्रनिर्मिता व्याख्या सर्वत्रादरदृष्ट्या विद्वद्भिरवलोक्यते। प्रकृति-पुरुषविवेकज्ञानेनैव मानवः आत्मानं कृतार्थम्मन्यते। विवेकज्ञानेनैव त्रिविधदुःखानामात्यन्तिकी निवृत्तिर्भवतीति सांख्यसिद्धान्तः। दर्शनमिदं पुरुषबहुत्वं मनुते। पुरुषश्च अपरिणामी, त्रैगुण्यरहितत्वादेव कैवल्यं तस्य सिध्यति। त्रिविधदुःखात्यन्ताभाव एव 'कैवल्य' पदेन निगद्यते। जगन्मूलकारणादारभ्य सूक्ष्मान्तो यावान् कार्यसमुदायः स एव 'लिंग' शब्देनाभिधीयते। प्रकृति-पुरुषसंयोगेन 'लिंग' चेतनमिव प्रतीयते। 'पुरुष'श्चोदासीनोऽपि 'कर्ते'व प्रतीयते। वस्तुतः कर्तृत्वादिधर्मवन्तस्तु 'गुणाः' सन्ति। पुरुषो मां पश्यत्विती‌च्छा प्रकृतेरस्ति। प्रकृतिस्तु भोग्या, तस्या भोग्यता, भोक्तारं विना न सम्भवितुमर्हति। अतः सा 'पुरुष'मपेक्षते। तथैव पुरुषोऽपि स्वकैवल्यार्थं 'प्रकृति'मपेक्षते। तस्मात्कारणात् प्रकृत्या एकीभावमापन्नः पुरुषः, प्रकृतिनिष्ठानि त्रिविधानि दुःखानि स्वस्मिन्नेव स्थितानि मनुते, अर्थात् त्रिविधदुःखानां 'भोक्ता' अहं-(पुरुष) मेवास्मि इति भ्रान्तधारणया, त्रिविधदुःखेभ्यो मुक्तिं कामयमानो भवति। सर्वाण्यपि कार्याणि सूक्ष्मरूपेण स्व-स्वकारणेषु विद्यमानानि, तेन दर्शनमिदं 'सत्कार्यवादं' स्वीकरोति। अतः सत्कार्यवादि दर्शनमिदमित्युच्यते।

सांख्यीयपरिणामवादस्य वैशिष्ट्यमिदमेव यत् स पुरुषस्य मोक्षार्थं भवति। सांख्यदर्शनदृष्ट्या बन्धन-मोक्ष पुनर्जन्मादयः पुरुषस्य न भवन्ति, अपितु नानापुरुषसम्पृक्ता प्रकृतिरेव पुनर्जन्म-बन्धन-मोक्षभागिनी भवति, तथापि सैन्यप्राप्तजय-पराजयौ राजनि यथा उपचर्येते, तथैव भोगापवर्गौ प्रकृतिगतावपि अविवेकवशात् पुरुषगताविति मन्यते लोकः। इत्याकारकाऽविवेकापसारणमेव 'बुद्धेः' कार्यमस्ति।

अन्यान्याऽऽस्तिकदर्शनानामिव सांख्यदर्शनमपि कर्म-पुनर्जन्म-मोक्षप्रभृतीन् सिद्धान्तान् स्वीकरोति। तथापि सांख्यदर्शनं कर्मणां सम्बन्धः सत्त्वादिगुणैः सह वर्तत इति मन्यते। पुनर्जन्मनि अपि एकस्मात् स्थूलशरीरात् अन्यस्मिन् स्थूलशरीरे चेतनोऽयमात्मा नैव गच्छति, अपितु 'लिंगशरीरं' प्रयाति। प्रतिपुरुषं लिंगशरीरसम्बन्धोऽनादिकालतो वर्तते। एष सम्बन्धः अविवेककृतोऽस्ति, किन्तु विवेके सति स समाप्तो भवति।

बुद्धिरियं 'प्रकृते'रेव परिणामः। सांख्यमते प्रकृतिरियं नित्या वर्तते। प्रकृत्या सह तादात्म्यानुभव एव पुरुषस्य बन्धकारणम्। तथापि अत्र जिज्ञासा भवति यत् यदि 'पुरुषो' निर्गुणो विकाररहितश्च तदा तस्य बन्धनं कथं सम्भवेत्? असति च बन्धन 'मुक्तेः' प्रश्न एव न प्रादुर्भवति। अतः पुरुषस्य विमोक्षार्थं 'प्रकृतेः' प्रवृत्तिरिति मुधैव कथनम्।

उक्तजिज्ञासा एवं समाधीयते- 'पुरुषो' न बद्धो भवति, न च मुक्तो भवति, नापि संसारमवाप्नोति। नानापुरुषाश्रिता प्रकृतिरेव संसरति बन्धनमाप्नोति मुक्तिञ्च लभते। स्वामिन्यारोपितजय-पराजयाविव प्रकृति-पुरुषविषयकेनाऽविवेकेन प्रकृतेर्भोगमोक्षौ 'पुरुषे' समारोप्येते प्राकृतैर्जनैः।

